


। अहर्निशं सेवामहे संस्कृतभारतम् ।




श्रीमती पी.एन.आर. शाह महिला आर्ट्स & कॉमर्स महाविद्यालयः, पालिताणा

इत्ययेन प्रस्तूयते

# संस्कृत-पीयूषम्



मासिकी-संस्कृतपत्रिका

मार्च, २०२४

अङ्कः - ४१






## संस्कृतं नाम दैवी वाक्





शहीद दिवस

-: सम्पादकः :-
डॉ. पङ्कज जी. त्रिवेदी

-: सह-सम्पादकः :-
आचार्योऽमरसिंहः राठौड़




# सम्पादन-मण्डलम्





-: सम्पादकः :-
डॉ. पङ्कज जी. त्रिवेदी
-: सह-सम्पादकः :-
आचार्योऽमरसिंहः राठौड़


-: स्थलम् :-
श्रीमती पी.एन.आर.शाह महिला
आर्ट्स एण्ड कॉमर्स महाविद्यालयः,
पालिताणा, गुजरात - ३६४२७०

-: सङ्कलन-स्त्रोतः :-
कृपाली कामलिया
दिलशाद पाटडिया
माया बोरीचा








संस्कृत-पीयूषं संस्कृतमासिकीपत्रिकायां स्वकाव्यरचना,
लेखः इत्यादिः प्रकाशनार्थम् अस्मभ्यं प्रेषयतु।
ई-मेइल आईडी वोट्सपक्रमाङ्कः च —
pankajtrivedi42@gmail.com
amarsinghrathore34@gmail.com
०१. 9408911280
०२. 9016227448
०३. 9737340454
(प्रेषणावधिः - २० मार्च, २०२४ पर्यन्तम्)

# अनुक्रमणिका

# पुरोवाक्



नमांसि मित्रेभ्यः सुरभारतीसमुपासकेभ्यश्च । सुष्ठु सर्वम् इति भावयामि । अचिरादेव पर्वाणि समायान्ति । वसन्त-ऋतोः वर्तते मासः । सर्वत्र ऋतुराजवसन्तस्य लीला दरीदृश्यते । प्रकृतौ मनोरमं वातावरणम् । अस्मिन्नेव मासे शिवरात्रिः आयातीति वयं जानीमहे । किमस्याः महत्त्वमुपादेयतेति सर्वे जानीरन् । शिवस्य रात्रिः शिवरात्रिः । वस्तुतः प्रतिमासमेव चन्द्रमासस्य चतुर्दशं दिनं शिवरात्रिरूपेण भवति किन्तु वर्षे अस्मिन्नेव मासे महाशिवरात्रेः महत्त्वम् अधिकम् वर्तते । अस्यां निशायाम् उत्तरी-गोलार्ध्दः तथावस्थितः भवति येन मानवानां ऊर्जाः ऊर्ध्वं गच्छति । अस्मिन्नैव दिने प्रकृतिः मानवानां आध्यात्मिकजगतः शिखरं गन्तुं साहाय्यं करोति । महाशिवरात्रिः आध्यात्मिक-पथं गन्तुकामानां कृते बहुमहत्वपूर्णा वर्तते । क्वचित् शिव-विवाहरूपेण समायोज्यते इयं रात्रिः । क्वचित् शिवस्य शत्रूणां विजयरूपेण आचर्यते । अस्मिन्नैव मासे होलिकोत्सवोऽपि आयाति तदर्थं सर्वेभ्यः शुभकामाः ।

होलिकोत्सवस्य महाशिवरात्रिपर्वणश्च शुभकामनाः





— सम्पादकः
डॉ. पङ्कज जी. त्रिवेदी
सौराष्ट्र-प्रान्तमन्त्री संस्कृतभारती,
प्राचार्यः महिला महाविद्यालयः,
पालिताणा, गुजरातम् ।

# उप-सम्पादकीयम्

## होलिकोत्सवः



चल सखि ! वृन्दावन धाम रे
श्यामो होली खेलति तत्र आलि २

नाना वर्णैः रज्यते सर्वम्
श्यामवर्णस्तु सर्वदा भिन्नम्
सकृत् रागेऽस्मिन् नः रञ्जय
श्यामो होली खेलति तत्र आलि

चल सखि ! वृन्दावन धाम रे.....

वल्ली तनोति यथा द्रुमदलम्
शाखातः शाखायाः वरणम्
तथैव प्रियमालिङ्गति प्रियकरी
श्यामो होली खेलति तत्र आलि !

चल सखि ! वृन्दावन धाम रे.......
चल सखि ! .............!



— सह-सम्पादकः
आचार्योऽमरसिंहः राठौड़
तालुका-संयोजकः संस्कृतभारती,
केन्द्र-शिक्षकः, महिला महाविद्यालयः,
पालिताणा ।

## श्लोकौ

**दक्षिणे लक्ष्मणो यस्य**
**वामे च जनकात्मजा ।**
**पुरतो मारुतिर्यस्य**
**तं वन्दे रघुनन्दनम् ॥**

**अन्वयः —**

यस्य दक्षिण दिशायां भ्राता लक्ष्मणः सदा विराजते। यस्य वामभागे राजा जनकस्य पुत्री सीता तथा अग्रे हनुमानः सदा विराजते तादृशः रामस्य चरणौ अहं प्रणमामि।

**घटे नष्टे यथा व्योम**
**व्योमैव भवति स्वयम् ।**
**तथैवाधिविलये**
**ब्रह्मैव ब्रह्मवित् स्वयम् ।।**

**अन्वयः —**

यथा घटस्य विनाशः तदन्तरकाशः आदिनकाशं भवति तथा जीवादि उपाधिनाशः ब्रह्मवेत्तपुरुषः एव ब्रह्मरूपः भवति।

## सुभाषिते

**अतितृष्णा न कर्तव्या**
**तृष्णा नैव परित्यजेत् ।**
**शनैः शनैश्च भोक्तव्यं**
**स्वयं वित्तमुपार्जितम् ।।**

**ભાવાર્થ —**

વધુ પડતી ઇચ્છા ન રાખવી અને ઇચ્છાઓનો સર્વથા ત્યાગ પણ ન કરવો પોતે કમાયેલા ધનનો ધીરે ધીરે ઉપભોગ કરવો.

**यथान्नं मधुसंयुक्तं**
**मधुवान्नेन संयुतम् ।**
**एवं तपश्च विद्या च**
**संयुक्तं भेषजं महत् ।।**

**ભાવાર્થ —**

જે પ્રકારે અન્નની સાથે મધ અને મધની સાથે અન્ન શરીર માટે લાભદાયક હોય છે, તેમ તપની સાથે વિદ્યા જીવન માટે લાભદાયક ઔષધ છે.

## प्रहेलिके

मेघश्यामोऽस्मि नो कृष्णो,
महाकायो न पर्वतः ।
बलिष्ठोऽस्मि न भीमोऽस्मि,
कोऽस्म्यहं नासिकाकरः ।।५७।।

एकाकी द्वारी तिष्ठामि
गृहपतौ बहिर्गते ।
गृहरक्षाकरः शुरो
लघुमूर्तिः सुकीर्तिमान् ।।५८।।



**–ः गतोत्तराणि ः–**
**५५. सीता, रामः, विद्या ।**
**५६. शिवः ।**



## विनोदकणिका

तिस्रः पिपीलिकाः सन्ति । एका रक्तवर्णी, एका कृष्णावर्णी, एका पिपीलिका श्वेतवर्णी।

कृष्णवर्णी पिपीलिका रक्तवर्णी-पिपीलिकां पृच्छति भवत्याः वर्णः रक्तः किमर्थम् ? सा कथयति अहं जनानां रक्तं पिबामि, अतः रक्तवर्णी अस्मि । रक्तवर्णी पिपीलिका कृष्णवर्णी पिपीलिकां पृच्छति, भवत्याः वर्णः कृष्णः किमर्थम् ?

अहं क्षेत्रं कार्यं कृतवती अतः मया वर्णः कृष्णः इति । द्वे पिपीलिके श्वेतवर्णी पिपीलिकां पृच्छतः भवत्याः वर्णः किमर्थं श्वेतः ?

श्वेतवर्णी पिपीलिका कथयति अहं फेर & लवली इति प्रसाधनं लेपयामि, अतः अहं श्वेतवर्णी अस्मि ।





## कथा

# वानरमकरयोः कथा

एकस्मिन् नदीतटे जम्बूवृक्षः अस्ति । तस्मिन् एकः वानरः वसति स्म । सः नित्यं मधुराणि जम्बूफलानि खादति स्म । तस्यां नद्यां एकः मकरः अपि वसति स्म । सः वानरस्य मित्रं आसीत् । वानरः मकराय अपि मधुराणि जम्बूफलानि यच्छति स्म । एकदा मकरः स्वाभार्यायै फलानि नयति । मकरस्य भार्या फलानि खादति । सा चिन्तयति, "यः प्रतिदिनं मधुराणि जम्बूफलानि भक्षयति तस्य हृदयं कीदृशं मधुरम् ?" सा मकराय कथयति, "अहं वानरस्य हृदयम् इच्छामि । "ततः मकरः नद्याः तटम् आगच्छति । वानरेण सह सः नद्याः जले तरति । मार्गे सः कथयति, "मम भार्या तव हृदयम् इच्छति ।" चतुरः वानरः शीघ्रं भाषते, "मम हृदयं तु अहं वृक्षे स्थापयामि स्म । अतः तत्र मम शीघ्रं गमनम् आवश्यकम् ।" मूर्खः मकरः तथा आचरति । तदा वानरः सत्वरं वृक्षस्य विटपम् आरोहति । ततः सः भाषते, "मूर्ख, हृदयम् अपि शरीरात् पृथक् भवति ? मकरः रिक्तहस्तः अभवत् पुनः तस्य मैत्री अपि नष्टा ।



**– सङ्कलिता**

## संस्कृताभ्यासपृष्ठः

હવે આગળ નીચે લખેલ શબ્દો મોઢે કરો —

| | | | |
|---|---|---|---|
| **ह्यः** | = ગઇ કાલ | **परश्वः** | = પરમ દિવસે |
| **श्वः** | = આવતી કાલ | **निरन्तरं** | = હમેશા, સદૈવ |
| **वदिष्यति** | = [તે] બોલશે | **गमिष्यति** | = [તે] જશે |
| **वदिष्यसि** | = [તું] બોલીશ | **गमिष्यसि** | = [તું] જઇશ |
| **वदिष्यामि** | = [હું] બોલીશ | **गमिष्यामि** | = [હું] જઇશ |
| **द्रक्ष्यति** | = [તે] જોશે | **पक्ष्यति** | = [તે] રાંધશે |
| **द्रक्ष्यसि** | = [તું] જોઇશ | **पक्ष्यसि** | = [તું] રાંધીશ |
| **द्रक्ष्यामि** | = [હું] જોઇશ | **पक्ष्यामि** | = [હું] રાંધીશ |
| **खादिष्यति** | = [તે] ખાશે | **करिष्यति** | = [તે] કરશે |
| **खादिष्यसि** | = [તું] ખાઇશ | **करिष्यसि** | = [તું] કરીશ |
| **खादिष्यामि** | = [હું] ખાઇશ | **करिष्यामि** | = [હું] કરીશ |

એમનો ઉપયોગ કરીને હવે તમે વાક્ય બનાવી શકો છો —

**०१. यदा त्वं तत्र गमिष्यसि तदा अहं त्वां द्रक्ष्यामि ।**
**०२. यदा त्वं खादिष्यसि, तदा अहम् अपि फलं खादिष्यामि ।**
**०३. यदा रामः अन्नं पक्ष्यति, तदा त्वम् अपि अन्नं खादिष्यति ।**
**०४. यदि त्वं तत्र भूषणं करिष्यसि तर्हि सः खादिष्यति ।**
**०५. अद्य अहं मम गृहं इदानीं गमिष्यामि, त्वं तत्र श्वः आगमिष्यसि किम् ?**
**०६. नहि, अहं तव गृहं परश्वः आगमिष्यामि ।**
**०७. कः इदानीं तत्र गमिष्यति ?**
**०८. अहम् अद्य अन्नं नैव पक्ष्यामि ।**
**०९. स कदा त्वया सह अत्र वदिष्यति ?**

હવે ઉપરનાં વાક્યોનાં ગુજરાતી વાક્યો જુઓ —

૦૧. જ્યારે તું ત્યાં જઇશ, ત્યારે હું તને જોઇશ.
૦૨. જ્યારે તું ફળ ખાઇશ, ત્યારે હું પણ ફળ ખાઇશ.
૦૩. જ્યારે રામ અન્ન રાંધશે ત્યારે તું પણ અન્ન ખાઇશ.
૦૪. જો તું ત્યાં દાગિનો ઘડાવશે, તો તે અન્ન ખાશે.
૦૫. હું મારે ઘેર આજે હમણાં જઇશ, તું આવતી કાલે ત્યાં આવીશ કે ?
૦૬. નહીં, હું તારી ઘેર પરમ દિવસે આવીશ.
૦૭. ત્યાં હમણાં કોણ જશે ?
૦૮. હું આજે અન્ન રાંધુ જ નહિ.
૦૯. તે તારી સાથે અહીં ક્યારે બોલશે ?

# इतिहासे कृष्णदिवसः



२०१९ तमस्य वर्षस्य फेब्रुवरी-मासस्य १४ दिनाङ्के सीआरपीएफ-सैन्य दलं जम्मू-कश्मीर-राष्ट्रीयराजमार्गेण गच्छति स्म । अस्मिन् काले भारतीयसैनिकाः बसयानेषु गच्छन्ति स्म । दलं पुलवामानगरं प्राप्तमात्रम् तस्मात् पूर्वं विस्फोटकैः पूर्णं वाहनम् नाशितम्, एकः विशालः विस्फोटः अभवत्, यस्मिन् ४० सीपीआरएफ-सैनिकाः हुतात्मः अभवन् । अस्य आक्रमणस्य उत्तरदायित्वं आतङ्कवादीसङ्गठनं जैश-ए-महम्मद इत्यनेन स्वीकृतम् आसीत् ।

भारतेन कृष्णदिवसस्य अनन्तरं पाकिस्तानात् प्रतिशोधः कृतः ???

एतेन आक्रमणेन समग्रः देशः अतीव दुःखितः अभवत्, एतेन सम्पूर्णम् देशवासिनः स्तब्धाः अभवन् । प्रधानमन्त्री श्री नरेन्द्र मोदी अपि अस्मिन् आक्रमणे अतीव दुःखितः सन् आतङ्कवादिनः आव्हानं दत्त्वा अवदत् यत् वयं अवश्यमेव प्रतिशोधं करिष्यामः। तदनन्तरं १२ दिवसाभ्यन्तरे भारतीयसेना पाकिस्ताने आतङ्कवादीनां निगूढस्थानेषु वायुप्रहारं कृतवती । भारतीयमिराज-२००० विमानं २५ फेब्रुवरी दिनाङ्के अर्धरात्रे उडडीयत । भारतीयवायुसेवा पाकिस्तानस्य बालाकोट्-नगरं लक्ष्यं कृत्वा तस्मिन् आक्रमणं कर्तुं आरब्धा, तस्मिन् काले ३०० आतङ्कवादिनः मारिताः ।



**– मयूरी सोण्डागर**
**संस्कृतच्छात्रा,**
**महिलामहाविद्यालयः,**
**पालिताणा।**

# संस्कृतग्रन्थेषु सङ्गीतं वाद्ययन्त्राणि च



अस्माकं श्रुत्यां स.रे.ग.म.प.द.न.सा नाट्यशास्त्रे क्रमशः चतुर्विधं वाद्ययन्त्राणि षड्ज ऋषभ, गान्धार, मध्यम, पञ्चम, धैवत, निषाद इत्यादीनां सप्तविधस्वरस्य वर्णनं वर्तते।इदं वर्णितम् अस्ति भरतमुनिः।

षड्जर्षभगन्धारमध्यमाः । पञ्चमो धैवतश्चाथ निषाद इति सप्तैते तेषां संज्ञा स.रे.ग.म.प.ध.नि. इत्यपरे मताः।।

यस्मिन् वीणा, ढोलक, शेहनै, मञ्जिरा, घुंघ्रु इत्यादयः प्रमुखाः सन्ति। एवं प्रकारेण वयं वक्तुं शक्नुमः यत् अस्माकं प्राचीनः संस्कृत-इतिहासः अतीव गौरवपूर्णः अभवत् । अस्माकं प्राचीनमहर्षिभिः विज्ञानक्षेत्रे याः अद्वितीयाः उपलब्धयः वयं विस्मर्तुं न शक्नुमः। तेषां अनुसरणं कृत्वा एव अद्य वयं सम्पूर्ण जगते ज्ञानसन्देशं दत्त्वा सभ्यतां संस्कृतं च रक्षयामः।

" ततन्चैवावनद्धं च घनं सुषिरमेव च चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वित्तम ।। "

**संस्कृतग्रन्थेषु चिकित्साशास्त्रम् आयुर्वेदं च :-**

आयुर्वेदः वयसः विज्ञानम् इति कथ्यते धन्वन्तरि चरक, सुश्रुत इत्यादीनां आयुर्वेदस्य विशेषं योगदानम् अस्ति। प्रत्येकं रोगस्य कारणं वटः, कफः, पित्तः च इति चरक इत्यादयः प्रस्तावितं, तेषां असन्तुलनस्य कारणात् अस्माकं शरीरे नैके रोगाः उत्पद्यन्ते।

"त्रयः शरीरदोषाः वातपित्तश्लेष्मणः ते शरीरं दुष्यन्ति, दौ पुनः सत्त्वदोषौ रजस्तमश्च तौ सत्तवं दूष्यतः । ताभ्यान्च सत्तव शरीराभ्यां दुष्टाभ्यां विकृतिरुपजायते नोप जायते चाप्रदुष्टाभ्याम् " ।।

सुश्रुतः महर्षिधन्वन्तरी इत्यस्य शिष्यः आसीत् , सः शल्यक्रियायाः पिता इति मन्यते । यत् ज्ञानं वैद्यैः प्रायः ४०० वर्षपूर्वं ज्ञातं आसीत्, तस्य वर्णनं सुश्रुतेन २६०० वर्षपूर्वं स्वस्य 'सुश्रुतसंहिता' इत्यत्र कृतम् अस्ति।सुश्रुतसंहितायां ३०० तः अधिकानां शल्यक्रियाणां वर्णनं, १२५ तः अधिकानि शल्यक्रियायन्त्राणि च प्राप्यन्ते।

उपकरणस्य उपयोगात् पूर्वं जले क्वाथनस्य अपि उल्लेखः अस्ति । वयं सुश्रुतसंहितायां कृत्रिम-अङ्गप्रत्यारोपणं, प्लास्टिक-शल्यक्रियां, मोतियाबिंदं, पाषाण-शरीर-भङ्गम् इत्यादीनां चिकित्सां प्राप्नुमः।



– हिनल जोषी
संस्कृतच्छात्रा,
पालिताणा।

# प्लास्टिक-सर्जरी



सुश्रुतेन उक्तं शास्त्रकर्मणि उपयोगिनोऽऽयुधानां संख्या शताधिकाः। परन्तु सुश्रुतः कथयति यत् शल्यक्रियायां वैद्यस्य हस्तः सर्वाधिकं महत्त्वपूर्णम् भवति। यन्त्रसम्बद्धानि सर्वाणि कर्माणि तदधीनानि सन्ति। यन्त्राणि षड्विधानि सन्ति- स्वस्तिकयन्त्रम्, सन्दनयन्त्रम्, ताल्यन्त्रम्, नादियन्त्रम्, शालयन्त्रम् तस्य उपयन्त्राणि च।

चतुर्विंशतिः स्वस्तिकयन्त्राणि, द्वे सन्दन्सयन्त्रे, द्वे तालन्यन्त्रे, विंशति नादियन्त्रे, अष्टाविंशतिशल्ययन्त्रे, पञ्चविंशति उपनयन्त्रे च सन्ति। सर्वे लोहेन वा तत्सदृशेन वा भवन्ति। एतेषां यन्त्राणां बहुविधपशुपक्षिमुखवत् अग्रमुखं भवति। तस्य रूपानुसारं वा निर्देशानुसारं कोऽपि वैद्यः स्वस्य युक्ति-प्रतिभा-प्रयोजनानुसारं अन्ययन्त्राणां आविष्कारं कर्तुं शक्नोति।

स्वस्तिक यन्त्रं कृतज्ञताङ्गुलस्य भवेत् । अस्य अग्रभागः सिंहव्याघ्रमेषऋक्षसिंदुबिडालगडडमृगकाकबगुलकुक्कुरमयूरगृध्रमुर्गसमदीशश उलूकमृगादिरूपं भवति। अस्थिसक्तत्वक् शिथिलीकरणाय उपयुज्यते।

अत्र सुश्रुतस्य तस्य वर्णनम् अत्यन्तं सार्थकम् अस्ति । यथा यथा पशुपक्षिणां मुखं भिन्नभिन्नरूपेण वस्तुग्रहणं करोति तथा वैद्यः एतैः यन्त्रैः रोगी अङ्गं दृढतया ग्रहीतुं शक्नोति। अतः शल्यक्रिया सुलभतया कर्तुं शक्यते।

एवं शल्यक्रियासम्बद्धाः बहवः विषयाः सुश्रुतस्य पुस्तके चर्चिताः सन्ति । तस्य आचरणं, अनुशासनं, घनपद्धतिः, अध्यापननियमाः, शरस्सम्पद्दोषा इत्यादयः अपि उल्लिखिताः सन्ति। एतेषां सर्वेषां सुश्रुतग्रन्थे बहुधा चर्चा कृता अस्ति।

सुश्रुतः अपि केचन विशेषाः शास्त्रप्रक्रमाः विवक्षिताः सन्ति । यथा क्षारकर्म, अग्निकर्म, नेत्रप्रकर्म, अश्मरीप्रकर्म आदि।

परन्तु अस्मिन् काले सुश्रुतस्य यशः तस्य नासप्रतिष्ठानस्य कृते एव अस्ति। अतः सुश्रुतेन सुनम्याचिकित्सा आविष्कृता । सुश्रुतः आधुनिक-न्यूनतम-आक्रामक-शल्यक्रियायाः जनकः इति अपि पश्चिमैः स्वीकृतम् अस्ति।




**- अनूदितः**
**माया बोरीचा**
**बालकेन्द्रम् - संयोजिका,**
**संस्कृतभारती, पालिताणा।**



## कथा

# आत्मविद्या

पुरातनकालस्य वार्ता अस्ति। एकः ब्रह्मचारी नैकानां विद्यानाम् अध्ययनं पूर्णीकृतवान्। इदानीं सः आत्मविद्यायाः ज्ञानं लब्धुमिच्छति स्म। सः स्वमनोरथसिद्ध्यर्थं प्रसिद्धस्य मुनेः आश्रमं प्राप्तवान्। गुरुणा तस्मै आश्रमे स्थातुम् अनुमन्यते स्म। तत्र बहुविधं सेवाकार्यं तस्मै दत्तम्।

ब्रह्मचारिणा तत्र सेवां कुर्वन् बहूनि दिनानि व्यतीतानि। परन्तु तस्य अध्ययनस्य आरम्भो नाभवत्। अस्मात् कारणात् तस्य मनसि बहवः संशयाः उत्पन्नाः। कुतो वा स सर्वोच्चात्मविद्याम् आस्वादयितुम् आगतः स्यात्, परन्तु सः सांसारिके कार्यक्लेशगर्ते न्यपतत्। एकदा यदा स घटं गृहीत्वा जलं पूरयितुं तडागं प्राप्तवान्। तत्र स क्रोधेन सन्तपति स्म।

स वालुकायाः उपरि बलात् कुम्भप्रहारं कृत्वा तत्रैव उपविष्ट्वान् । ततो घटात् शब्दः आगतः - " किमर्थम् त्वम् एतावत् क्रोधं उग्रत्वं च दर्शयसि ? यदि गुरुणा तव आश्रयो दत्तः तर्हि अवश्यमेव शीघ्रं पश्चात् वा तव मनोकामना अपि पूर्णा भविष्यति। "

एतच्छ्रुत्वा ब्रह्मचारी अवदत् - "अहं लौकिककार्यं कर्तुमत्र नागतोऽस्मि। आत्मविद्यां प्राप्तुम् अत्रागतोऽस्मि। परन्तु अत्र तु मम समयः परेषां सेवायामेव व्यतीतो भवति।"

एतच्छ्रुत्वा घटः अवदत् - "शृणु मित्र ! पूर्वम् अहं केवलं मृत्तिकाखण्ड एव आसम्।" प्रथमं कुम्भकारः मां गृहीत्वा ताडितवान्, द्रवितवान् च कतिपयानि च दिनानि यावत् पादमर्दनमपि कृतवान्। तदनन्तरं स मां आकारं दत्त्वा आवाके प्रज्ज्वालितवान्।

एतस्य सर्वस्य कृपया अद्य अहं तव समक्षम् इत्थं रूपेण उपस्थितोऽस्मि । यदि त्वमपि अग्रे गन्तुम् इच्छेः तर्हि समस्याभ्यः मा भयम् अनुभवेः। केवलं स्वकर्मणि सङ्लग्नो भव।

एतच्छ्रुत्वा ब्रह्मचारिणः क्रोधः सन्तापः च दूर्यभवताम्। सः पूर्णसमर्पणेन सह गुरोः आज्ञां अनुसरिष्यति इति सङ्कल्पं कृतवान् । गुरुरपि तस्य स्वव्यवहारे

आगतम् एतत् परिवर्तनं ज्ञातवान्। यतोहि आत्मविद्या बुद्धिविषयिणी अभूत्वा अनुभूतेः विषयोऽस्ति ।

अतः शिष्येण यथार्थसमर्पणस्य पाठं शिक्षणानन्तरमेव तस्य शिक्षा आरब्धा अग्रे च गत्वा सः एकः प्रसिद्धो ज्ञानी पुरुषो बभूव ।

**शिक्षा - आपद्भ्यः मा भयम्। पूर्णसमर्पणेन कार्यं कुरुत। साफल्यम् अवश्यं प्राप्स्यते ।**



**– कृपाली कामलिया**
**नगर-संयोजिका,**
**संस्कृतभारती,**
**पालिताणा।**

# स्वप्नवासवदत्तम्



तृतीयोङ्कः — " अन्धीकरोति मे हृदयम् " इति यथा पूर्वमुक्तम् तथा वासवदत्ता, परिजनेषु पद्मावत्याः कौतुकमङ्गलोत्सवेषु व्यग्रेषु सत्सु स्वयं सपत्नीशङ्काव्याकुलितमानसा मनोविनोदाय विहाराकामा प्रमदवनं गच्छति । पद्मावत्याः कौतुकमाला तु अवन्तिकया (एवं गुप्ताभिधानया वासवदत्तया) एव गुम्फनीयेति पद्मावत्या भ्रातृजायया दर्शकपत्न्या समादिष्टम् । तदर्थं च काचित् चेटी पुष्पभाजनं गृहीत्वा वासवदत्ताम् अन्विष्य तत्रागच्छति । तदभिप्रायं ज्ञात्वा पुनरपि अधिकतरमेव सन्तप्यमाना सा, पद्मावत्याः स्नेहवशंवदा समुचितकार्यव्याकुलतया तत्कार्यम् अङ्गीकरोति । मालां च गुम्फित्वा समर्पयति । तथापि विनोदम् अलभमाना सा निद्रयाऽपि शमो लभ्येत इति कृत्वा शय्यास्थानं गतवती ।

चतुर्थोङ्कः — विवाहस्तु संवृत्तः । उदयनस्य नर्मसचिवः वसन्तकः राज्ञा सह नानाकष्टानि अनुभूयमान औदरिकः कानिचनाहानि यापयति । उदयनपद्मावत्योः विवाहप्रसङ्गेन यथेष्टाहारविहारलाभेन च सन्तृप्तः वसन्तकः कृतभोजनादीनां विपरिणामैः क्लिश्यन् भोजनमेव द्वेष्टि । अथैकदा पद्मावती सपरिवारम् वासवदत्तया सह शेफालिकागुल्मकाः कुसुमिता वा न वेति परिज्ञातुं प्रमदवनं गच्छति । तत्र परस्परं संल्लापमग्ने ते उभे । अत्रान्तरे वसन्तकेन सह सम्भाषमाण उदयनोऽपि तदेव वनं प्रविशति । उदयनदृशः वासवदत्तामपवारितुकामा पद्मावती तया सह माधवीलतामण्डपं प्रविशति । शृणोति च तयोः संल्लापम् । ततः वसन्तकेन पृष्टः उदयनः वासवदत्तायां पद्मावत्यां च स्वस्य स्नेहं समानं विशदयति । पुनः पुनः तस्याः गुणान् संस्मृत्य मुह्यति च । तदा पद्मावती तत्रागत्य वसन्तकेन आनीतं जलम् तस्य मुखे संसिच्य तमुपचरति ।

**अनुक्रमः**



**– जल्पा मुञ्जपरा**
**संस्कृतशोधच्छात्रा,**
**व्याख्यात्री**
**स्वामिसहजानंदमहाविद्यालयः,**
**भावनगरम्।**

# वेदेषु नाट्योत्पत्तिः



**जग्राह पाठ्यं ऋग्वेदात्**
**साम्नाये गीतमेव च ।**
**यजुर्वेदादभिनयं**
**रसानाथर्वणादपि ।।**
**(नाट्यशास्त्रम् १_१७)**

सर्वज्ञानमयो हि सः इति। पङ्क्त्यनुसारं वेदे सर्वं निहितमस्ति। तथैव भरतमुनेः मतानुसारं नाट्यतत्त्वताम् अथ च नाट्यस्य एव सृष्टिः वेदादेव अवस्थितिः। एतेषां मतानुसारं ऋग्वेदस्य जगा्हय पाठम् इत्युक्ते (dilogue) इत्यस्य सृष्टिरजायत । यजुर्वेदात् अभिनयं नाम (Actzon) इत्यस्य उत्पत्तिरभवत् सामवेदात् गीतम् इत्युक्ते (song ) इत्यस्य सृष्टिः अभवत् तथा अथर्ववेदात् रसोत्पतिरभवत्। इत्यत्र वेदस्य सर्वज्ञता प्रमाणीभवति।



**- अनूदितः**
**पायल वीसावाडिया**
**बालकेन्द्रम्-संयोजिका,**
**संस्कृतभारती,**
**जामङ्गरम्।**

# द्वादश-ज्योतिर्लिङ्गम्



### ०९. बाबा विश्वनाथज्योतिर्लिङ्गम्

नवमं ज्योतिर्लिङ्गम् उत्तरप्रदेशस्य वाराणसीनगरे स्थितम् अस्ति। एतत् ज्योतिर्लिङ्गं बाबा विश्वनाथज्योतिर्लिङ्गम् इति नाम्ना प्रसिद्धम् अस्ति। हिमालयात् निर्गत्य शिवः अत्रैव निवासं कृतवान्।



### १०. त्र्यम्बकेश्वरज्योतिर्लिङ्गम्

दशमं ज्योतिर्लिङ्गं महाराष्ट्रस्य नासिकमण्डले गोदावरीनद्याः तटे स्थितम् अस्ति। एतत् ज्योतिर्लिङ्गं त्र्यम्बकेश्वरज्योतिर्लिङ्गम् इति नाम्ना प्रसिद्धम्।



### ११. केदारनाथज्योतिर्लिङ्गम्

एकादशं ज्योतिर्लिङ्गम् उत्तराखण्डे अलकनन्दा-मन्दाकिनी-नद्योः मध्ये केदार-नामक-पर्वते स्थितम् अस्ति। एतत् ज्योतिर्लिङ्गं केदारनाथज्योतिर्लिङ्गम् इति प्रसिद्धम् अस्ति।



### १२. घुष्मेश्वर ज्योतिर्लिङ्गम्

द्वादशं ज्योतिर्लिङ्गं महाराष्ट्रे स्थितम् अस्ति। एतत् ज्योतिर्लिङ्गं घुष्मेश्वर ज्योतिर्लिङ्गं कथ्यते। ज्योतिर्लिङ्गमिदं शिवालयाख्ये स्थाने स्थितम् अस्ति। इति अन्तिमम् ज्योतिर्लिङ्गम्।

– अनूदितः
माया बोरीचा

# मासिकपञ्चाङ्गम्

## मार्च-२०२४ माघ-फाल्गुनः २०८० युगाब्दः - ५१२५

| भानुः | सोमः | भौमः | बुधः | गुरुः | शुक्रः | शनिः |
|---|---|---|---|---|---|---|
| | | | | | ०१ माघ कृष्ण षष्ठी | ०२ माघ कृष्ण सप्तमी |
| ०३ माघ कृष्ण अष्टमी | ०४ माघ कृष्ण अष्टमी | ०५ माघ कृष्ण नवमी | ०६ माघ कृष्ण दशमी/ एकादशी | ०७ माघ कृष्ण द्वादशी | ०८ माघ कृष्ण त्रयोदशी | ०९ माघ कृष्ण चतुर्दशी |
| १० माघ अमावस्या | ११ फाल्गुन शुक्ल प्रतिपदा | १२ फाल्गुन शुक्ल द्वितीया/ तृतीया | १३ फाल्गुन शुक्ल चतुर्थी | १४ फाल्गुन शुक्ल पञ्चमी | १५ फाल्गुन शुक्ल षष्ठी | १६ फाल्गुन शुक्ल सप्तमी |
| १७ फाल्गुन शुक्ल अष्टमी | १८ फाल्गुन शुक्ल नवमी | १९ फाल्गुन शुक्ल दशमी | २० फाल्गुन शुक्ल एकादशी | २१ फाल्गुन शुक्ल द्वादशी | २२ फाल्गुन शुक्ल त्रयोदशी | २३ फाल्गुन शुक्ल त्रयोदशी |
| २४ फाल्गुन शुक्ल चतुर्दशी | २५ फाल्गुन पूर्णिमा | २६ फाल्गुन कृष्ण प्रतिपदा | २७ फाल्गुन कृष्ण द्वितीया | २८ फाल्गुन कृष्ण तृतीया | २९ फाल्गुन कृष्ण चतुर्थी | ३० फाल्गुन कृष्ण पञ्चमी |
| ३१ फाल्गुन कृष्ण षष्ठी | | | | | | |

### विशेषदिनानि

०४ - राष्ट्रीयसुरक्षादिवसः
०५ - श्रीरामदासनवमी, स्वामिदयानन्दसरस्वतीजयन्ती
०८ - महाशिवरात्री, विश्वमहिलादिवसः
१२ - रामकृष्णजयन्ती
१५ - विश्वग्राहकदिवसः
२१ - कवितादिवसः
२३ - शहीददिवसः, विश्ववायुदिवसः
२४ - होली
२५ - धुलेटी, चैतन्यजयन्ती
२७ - रङ्गमञ्चदिवसः
२८ - पानदिवसः
२९ - गुड-फ्राइडे

### मङ्गलाचरणम्

कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः
शापेनास्तङ्गमितमहिमा वर्षभोग्येण भर्तुः ।
यक्षश्चक्रे जनकतनया स्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥

महाकविकालिदासविरचितं
" मेघदूतम् "

# सौराष्ट्रे संस्कृत-कार्यम्

वेणु-बालकेन्द्रम्

સંસ્કૃત ભારતી જૂનાગઢ જનપદ દ્વારા આયોજિત ઓનલાઈનસંસ્કૃત બાલકેન્દ્ર

૨ ફેબ્રુઆરી, ૨૦૨૪ શુકવારે રાત્રે 8:00 થી 9:00 ૫ થી ૧૫ વર્ષના કોઈ પણ બાળકો જોડાઈ શકે છે.

ગૂગલ મીટ પર

https://meet.google.com/ced-occz-xhq

संस्कृतभारती, जूनागढद्वारा आन्तरजालिय वेणु-बालकेन्द्रम् , जूनागढ़जनपद । [०२/०२/२०२४]
[प्रति शुक्रवासरे प्रचलति]

Amisha Darji | Namrata Nerlekar | daksha dabhi | Rashesh Mehta | Saroj Joshi | Geerva Kanchan | Badur Vadhiya | manisha kaneriya | Disha Chavda | Ramnikbhai Koradia | Namrata Nerlekar

ગુજરાત દર્શન યાત્રા સમાચાર

04/02/2024

સંસ્કૃતભાષાનાં સંવર્ધન પ્રચાર-પ્રસાર સાથે સમગ્ર ભારત દેશમાં જનપદ સંમેલન સંસ્કૃતમાં યોજાઈ રહ્યુ છે.

સંસ્કૃતભારતી દ્વારા આયોજિત અને વિવિધ સામાજિક, શૈક્ષણિક અને ધાર્મિક સંસ્થાઓના સહયોગથી ભાવનગરમાં સંસ્કૃત જનપદ સંમેલન યોજાયુ હતું.

संस्कृतभारती, भावनगरम्

॥ संस्कृतसम्मेलनम् ॥

संस्कृतभारती, भावनगरद्वारा जनपद-सम्मेलनम् अभवत् , भावनगरम् ।
[०३ फरवरी, २०२४]









**संस्कृतभारती, सौराष्ट्र-प्रान्तद्वारा उच्चारणाभ्यास-वर्गः (फरवरी, २०२४)**




**संस्कृतभारती, सौराष्ट्र-प्रान्तद्वारा भाषा-कौशल-वर्गः (फरवरी, २०२४)**

Dhaneshri



मुक्तक -१०

संस्कृतभारती - सौराष्ट्रप्रान्तः
(संस्कृतभारती - गुजरातन्यासः)

संगठनस्य सूत्रमाला

वक्ता

डॉ.कोमल भट्ट

सहायक-प्राध्यापिका सर्वकारीय विनयन एवं विज्ञान महाविद्यालय, जादर तथा प्रान्तगणसदस्या/ महिलाविभागसंयोजिका, संस्कृतभारती - सौराष्ट्रप्रान्तः

५-०२-२०२४
सोमवासर
रात्रौ ९:०० तः १०:००

https://meet.google.com/pjo-bspw-frr









**संस्कृतभारती, सौराष्ट्र-प्रान्तद्वारा सङ्गठनस्य सूत्रमाला**

**[फरवरी, २०२४]**

**संस्कृतभारती, पालिताणाद्वारा साप्ताहिक-मेलनम् , पालिताणा ।**

**[फरवरी, २०२४]**

**[प्रति बुधवासरे प्रचलति ।]**





**नीतिसुधाश्लोकशृङ्खलाम् आस्वादयितुम् अत्र नुदन्तु**





https://youtube.com/@sanskritians.?si=7EQWm-DszJLQrclr



https://www.instagram.com/sanskritians_?igsh=MXF1M2NqNGt4MXRiMQ==

सौराष्ट्रप्रान्ते संस्कृतभारत्याः आयोजितानां कार्यक्रमाणां सचित्रं विवरणं प्रतिमासं २० दिनाङ्कयावत् प्रेषणीयम् ।

ईमेल आइडी –
pankajtrivedi42@gmail.com
amarsinghrathore34@gmail.com

वोट्सप क्रमाङ्कः –
०१. 9408911280
०२. 9016227448
०३. 9737340454